शिवाभ्यान्नमः ।

# अथ श्रीमठाम्नायः ।



ओम् शारीरब्रह्ममीमांसाभाष्यकर्ता हि सद्गुरुः ।
मुनिः श्रीशङ्कराचार्यो लोकोपकरणाय वै ॥ १ ॥
चतुर्दिशां प्रदेशेषु प्रसिद्ध्यर्थं स्वनामतः ।
चतुरस्समठान् कृत्वा शिष्यानस्थापयद्विभुः ॥ २ ॥
चकार संज्ञामाचार्यश्चतुर्णान्नामभेदतः ।
क्षेत्रञ्च देवताश्चैव शक्तिं तीर्थं पृथक्पृथक् ॥ ३ ॥
संप्रदायांश्च नाम्नाञ्च भेदञ्च ब्रह्मचारिणाम् ।
चतुर्णाञ्च मठानाञ्च शिष्यान्देवान्व्यवस्थया ॥ ४ ॥
एवं प्रकल्पयामास लोकोपकरणाय वै ।

## ॥ अथ पूर्वाम्नायाः ॥

॥ १ ॥ पश्चिमे कालिकापीठं द्वारकाक्षेत्रमुच्यते ॥ ५ ॥
कीटवारस्सम्प्रदायस्तीर्थाश्रमपदे उभे ।
देवस्सिद्धेश्वरश्शक्तिर्भद्रकालीति विश्रुता ॥ ६ ॥

स्वरूपब्रह्मचार्याख्य आचार्यः पद्मपादकः ।
विख्यातं गोमतीतीर्थं सामवेदस्तथोच्यते ॥ ७ ॥
तत्त्वमस्यादिवाक्यं च जीवात्मपरमात्मनोः ।
एकीभावं विनिर्दिश्य नामान्युक्तान्यनुक्रमात् ॥ ८ ।
॥२॥ द्वितीयः पूर्वदिग्भागे गोवर्धनमठः स्मृतः ।
भोगवारस्सम्प्रदायो वनारण्यपदे तथा ॥ ९ ॥
तस्मिन् देवो जगन्नाथःपुरुषोत्तमसंज्ञकः ।
क्षेत्रं च सर्वलोकेषु तन्नाम्नैव हि विश्रुतम् ॥ १० ॥
प्रकाशब्रह्मचारीति हस्तामलकसंज्ञितः ।
आचार्यः प्रथितस्तत्र नाम्ना भेदः पृथक्पृथक् ॥ ११
स्नानं महोदधेस्तीर्थं शुक्लं यजुरुदाहृतम् ।
महावाक्यं च तत्रोक्तं प्रज्ञानं ब्रह्मसंज्ञकम् ॥ १२ ॥
॥ ३ ॥ उत्तरे श्रीमठः क्षेत्रं ख्यातो बदरिकाश्रमः ।
देवो नारायणो देवी शक्तिः पूर्णगिरीति च ॥ १३ ॥
सम्प्रदायो नन्दवारः तीर्थञ्चालकनन्दका ।
आनन्दब्रह्मचारीति गिरिपर्वतसागराः ॥ १४ ॥
नामानि तोटकाचार्यो वेदोऽथर्वणसंज्ञकः ।
महावाक्यं च कथितमयमात्मा ब्रह्मेति च ॥ १५ ॥

॥ ४ ॥ दिग्भागे दक्षिणे रम्यः शृङ्गेर्यां शारदामठः ।
वराहो देवता तत्र रामक्षेत्रमुदाहृतम् ॥ १६ ॥
तीर्थञ्च तुङ्गभद्राख्यं शक्तिः श्रीशारदेति च ।
चैतन्यब्रह्मचार्याख्य आचार्यो विश्वरूपकः ॥ १७ ॥
सरस्वतीति नामानि भारतीति पुरीति च ।
सम्प्रदायो भूरिवारः कृष्णं यजुरुदाहृतम् ॥ १८ ॥
महावाक्यं च कथितमहं ब्रह्मास्मिनामतः ।
चतुर्णाश्चामराणाञ्च वेदा देवाश्च शक्तयः ॥ १९ ॥
महावाक्यानि चाचार्या उक्तास्तीर्थाश्रमादयः ।
आचार्यशिष्याश्चत्वारः सर्वलोकेषु विश्रुताः ॥ २० ॥
पद्मपादस्सुरेशश्च हस्तामलकतोटकौ ।
शङ्कराचार्यवर्यस्य शिष्या भाष्यकृतस्स्मृताः ॥ २१ ॥

इति पूर्वाम्नायाश्चत्वारः ।

॥ अम् ॥ अथ श्रीभगवत्पादैः स्वमठत्वेन संस्तुतः ।
सर्वोत्तरस्सर्वसेव्यः कामकोष्ठधरातले ॥ २२ ॥
पराशक्तेः परं स्थानं काञ्च्यां श्रीशारदामठः ।
क्षेत्रं सत्यव्रतं नाम तीर्थं कम्पानदी वरा ॥ २३ ॥
देवस्तत्र तथैकाम्रनाथ ऋग्वेद ईरितः ।

शक्तिः श्रीकामकोट्येव प्रणवश्चोपदेशवाक् ॥ २४ ॥
शुद्धा सरस्वती चेन्द्रानन्दपूर्वा च भारती ।
भगवत्पाद इत्यादिनामान्यन्यानि च स्वतः ॥ २५ ॥
मिथ्यावारस्सम्प्रदायः परिव्राजकसंज्ञितः ।
आचार्यश्शङ्कराचार्यस्तत्राद्वैतप्रवर्तकः ॥ २६ ॥

इति मुख्याम्नायः ।

कीटवारोभोगवारानन्दवारौ तथैव च ।
भूरिवारश्च चत्वारः पूर्वाम्नाये प्रकीर्तिताः ॥ २७ ॥
मुख्याम्नाये तु यन्मिथ्या वार्यते ब्रह्मणः परम् ।
मिथ्यावार इति ख्यातः सम्प्रदायस्ततो गुरोः ॥ २८ ॥
कीटं पातकमित्युक्तं वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनाञ्च कीटवारस्स उच्यते ॥ २९ ॥
भोगो विषय इत्युक्तो वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनाञ्च भोगवारस्स उच्यते ॥ ३० ॥
भूरिशब्देन सौवर्णं वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनाञ्च भूरिवारस्स उच्यते ॥ ३१ ॥
आनन्देति विलासो यो वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनाञ्चानन्दवारस्स उच्यते ॥ ३२ ॥
वसिष्ठो भार्गवश्चैव काश्यपस्तदनन्तरम् ।

भारद्वाजश्च चत्वारि गोत्राणि कथितानि वै ॥ ३३ ॥
उक्ताश्चत्वार आम्नायाः पूर्वेषां तु पृथक्पृथक् ।
अथोर्ध्वशेषे गौणा ये तेऽपि ज्ञानेन सिद्धिदाः ॥३४॥

॥ इत्याम्नायसम्प्रदायनिर्वचनम् ॥

॥ अथोत्तराम्नायाः ॥

॥५॥ पञ्चमस्तूर्ध्व आम्नायस्सुमेरुमठ उच्यते ।
सम्प्रदायोऽथ काशी स्यात् पदं नामाभिधं स्मृतम् ॥३५॥
कैवल्यक्षेत्रमित्युक्तं देवताऽस्य निरञ्जनः ।
देवी माया तथाचार्य ईश्वरः परिकीर्तितः ॥ ३६ ॥
तीर्थं सुमानसं प्रोक्तं त्रैलोक्यशरणं महत् ।
तत्र संहारमार्गेण सन्न्यासं महदाश्रयेत् ॥ ३७ ॥
॥ ६ ॥ षष्ठे त्वात्मनि चाम्नाये परमात्मा मठो महान् ।
सत्सन्तोषस्सम्प्रदायः पदं योगमनुस्मरन् ॥ ३८ ॥
तस्मिन् सरोवरं प्रोक्तं परहंसोऽस्य देवता ।
देवी स्यान्मानसी मायाप्याचार्यश्चेतनाह्वयः ॥ ३९ ॥
त्रिपुटी तीर्थमित्युक्तं सर्वपुण्यप्रदायकम् ।
भवपाशविनाशाय सन्न्यासं तत्र चाश्रयेत् ॥४०॥
७॥ सप्तमे निष्कलाम्नाये शुद्धशास्त्रार्थजो मठः ।

सम्प्रदायोऽस्य तत्सत्त्वं श्रीगुरोः पादुके पदे ॥ ४१ ॥
तत्रानुभूतिः क्षेत्रं स्याद्विश्वरूपोऽस्य देवता ।
देवी चैतन्यशक्तिस्स्यादाचार्यस्सद्गुरुस्ततः ॥ ४२ ॥
शास्त्रस्य श्रवणं तीर्थं जन्ममृत्युविनाशनम् ।
पूर्णानन्दक्रमेणैव सन्न्यासं तत्र चाश्रयेत् ॥ ४३ ॥
इत्युत्तराम्नायास्त्रयः ॥ इत्याम्नायाष्टकम् ॥

अथ नामनिर्वचनम् ।

तीर्थाश्रमवनारण्यगिरिपर्वतसागराः ।
सरस्वती भारती च पुरी नामानि वै दश ॥ ४४ ॥
त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्येवलक्षणे ।
स्नायात्तत्त्वार्थभावी यस्तीर्थनामा स उच्यते ॥ ४५ ॥
आश्रमग्रहणे प्रौढमायापाशविवर्जितम् ।
यातायातविनिर्मुक्तमेतदाश्रमलक्षणम् ॥ ४६ ॥
सुरम्ये निर्जने स्थाने वने वासं करोति यः ।
आशाबन्धविनिर्मुक्तो वननामा स उच्यते ॥ ४७ ॥
अरण्यसुस्थितो नित्यमानन्दी नन्दने वने ।
त्यक्त्वा वैरं सर्वमिदमरण्याख्यस्स उच्यते ॥ ४८ ॥
वासी गिरिवरे नित्यं गीताध्ययनतत्परः ।

गम्भीराचलबुद्धिश्च गिरिनामा स उच्यते ॥ ४९ ॥
वासः पर्वतमूलेषु प्रौढा या ज्ञानधारणी ।
सारासारं विजानाति पर्वतस्स प्रकीर्तितः ॥ ५० ॥
यस्तु सागरगम्भीरो ज्ञानरत्नपरिग्रहः ।
मर्यादां न विलङ्घेत सागरः परिकीर्तितः ॥ ५१ ॥
स्वरज्ञानरतो नित्यं स्वरवादी कवीश्वरः ।
संसारसागरेऽसारे सावधानस्सरस्वती ॥ ५२ ॥
विद्याभारेण सम्पूर्णस्सर्वभारं परित्यजेत् ।
दुःखभारं न जानाति भारती स प्रकीर्तितः ॥ ५३ ॥
ज्ञानतत्वेन सम्पूर्णः पूर्णतत्वे पदे स्थितः ।
परब्रह्मरतो नित्यं पुरीनामा प्रकीर्तितः ॥५४॥
चत्वारः पूर्व आम्नायास्समुख्याश्चोत्तरास्त्रयः ।
सम्प्रदायास्तथा पञ्च नामानि दश चेरितम् ॥ ५५ ॥

इति श्रीदशनामाभिधानानि ।

इति श्रीशङ्कराचार्यपथे मठाम्नायाः ।

पूर्वोक्ततीर्थाश्रमादीनां मध्ये केषाञ्चिन्नाम्नां स्वस्वशीलाचारमताभिमानेन जातास्सम्प्रदायास्तत्तन्नामभेदाश्च — तीर्थसम्प्रदायभेदौ चिदम्बरी जगन्नाथी चेति द्वौ । सर्वती-

र्थसम्प्रदायो महातीर्थसम्प्रदाय इति च द्वावपरौ । आश्रमसम्प्रदायभेदौ च मठी करवटी चेति द्वौ । भारतीसम्प्रदायार्थभेदौ प्रभावः प्रतापश्चेति । सरस्वतीसम्प्रदायभेदावानन्दसरस्वती इन्द्रसरस्वती चेति । तत्र तयोर्भेदाश्चत्वारः—'माधवी कामकोटीति कोल्लूरी मापुरीति च ।' इन्द्रभेदस्त्वेक एव ॥

॥ इति मठाम्नायास्तद्भेदाश्च ॥ ॐ शिवाभ्यां नमः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्यश्रीमच्छङ्करभगवत्पूज्यपादशिष्यश्रीसर्वज्ञचित्सुखाचार्यविरचिते बृहच्छङ्करविजये आम्नायतद्भेदनिर्वचनन्नाम त्रयोदशं प्रकरणम् ॥

---

